

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥
॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीसीताङ्गजा षोडश यूथेश्वरी स्तोत्रम् ॥

*This text has been prepared by*
*Vishal Pandey (B.Tech IIT Kanpur)*
*with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara***
***Jagadguru Rāmānandāchārya***
***Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम्।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम्॥**

# श्री सीताङ्गजा षोडश यूथेश्वरी स्तोत्रम्

## श्रीचन्द्रकला

सीमा सौभाग्य शोभा सकल गुणकलापूर्णचन्द्राननाभा
श्रीरामानन्दरागारमण रसमयी सर्वदानन्ददात्री।
श्रीसीताकान्तकान्ता प्रियतमपरमा प्रेमपूर्णाभिरामा सेव्या
सर्वेश्वरी सा सकल युवतिभिः मुख्यचन्द्राकलाख्या॥ १॥

जानक्यांशकला कलापमधुरा सौन्दर्यसीमा परा
प्रेष्ठा प्रेष्ठतरा प्रसन्नवदना यूथेश्वरी सौख्यदा।
भक्ताभीष्टकरा प्रमोदनिलया रामप्रिया प्रेमदा
ख्याता चन्द्रकलाभिधा जयति सा सौभाग्यसम्पत्तिदा॥ २॥

## श्रीप्रसादा

श्रीमद्रामप्रसादसाधनकरी सौन्दर्यसच्चिन्मयी
सर्वाशापरिपूरणी रसवहा वैराग्यराग प्रदा।
प्रेमानन्दस्वरूपिणी परपदप्राप्त्यैकनिः श्रेणिका
श्रीसीता प्रणय प्रदान निरता श्रीमत्प्रसादाभिधा॥ ३॥

विद्याचारुतरा प्रसन्नवदना वेद्या सुयोगेश्वरैः
संसेव्या सुसुरेन्द्र वन्दितपदा वेदान्त विद्यामयी।
ध्येयाराम पदाब्ज भक्तिरचलानन्द प्रदानोद्यता
सीतायाश्च कृपाकटाक्ष कलिता सेव्या प्रसादाभिधा॥ ४॥

## श्रीविमला

श्रीसौन्दर्यसुखालया रसमयी लावण्यदालासिनी
लीला लोलकलाकलाप चतुरा चन्द्रप्रभोल्लासिनी।

श्रीरामस्य सदैव संप्रणयिनी यूथेश्वरी सौख्यद
जयति श्रीविमलाभिधा रसमयी सान्निध्यदा सर्वदा ॥ ५ ॥

विद्युन्निन्द्यनिभाङ्ग कोमलतरा सन्तप्त स्वर्णाम्बरा
श्रीसीतापरिचारिका प्रियसखी रामप्रिया सर्वदा ।
सौन्दर्यैकनिकेतना रसकला कल्याण्दा कोमला
सेव्या श्रीविमलाभिधा प्रणयिनी सङ्गीत काव्येष्टदा ॥ ६ ॥

## श्रीमदनकला

क्रीडालोलकलाकदम्बनिलया कल्लोलिनी कामदा
कर्पूराभ कुमुत्प्रसन्नवदना कादम्बिनी सन्निभा ।
नित्यानन्य निचोल भूषणधरा नानानुभावप्रदा
सेव्या श्रीमदनकलाख्य रमया भाव्यास्तु भूतिप्रदा ॥ ७ ॥

प्रेमानन्दविलासिनी प्रियसखी प्राणेशि प्रेमप्रदा
विद्युद्भास्वर भाव्यभूषणभरा भावासु नव्या गुणैः ।
श्रीरामस्यकृपाकटाक्षनिलया सन्नृत्यवाद्येरता
सेव्या सा सततं सुरासरसिकैः श्रीमन्मदनमञ्जरी ॥ ८ ॥

## श्रीविश्वमोहिनी

विश्वारामपरा विमोहनकरी विश्वैक वन्द्याश्रया
विद्यावेद विधायिनी विभुतरा विश्वैक बीजालया ।
वेद्या सा सहजानुराग जननी विद्या रसालम्बिनी
श्रीमद्विश्वविमोहिनी भजसखे यूथेश्वरीं सर्वदा ॥ ९ ॥

श्रीरामाप्तिकरीं रसैकनिलयां रम्यां रमा सङ्गिनीं
विद्यावेद विधान तत्त्व निलयां ज्ञानैक गम्यां पराम् ।
शश्वद्रामप्रसादिनीं परतरां भक्त्यैकवेद्यां शुभां
वन्दे विश्वविमोहिनीं प्रियसखीं सीतापतेर्वल्लभाम् ॥ १० ॥

## श्रीउर्मिला

श्रीमच्छीलस्वभाव वैभवपरां सद्रूपिणी सत्क्रियां
शश्वत्केलिपरां परात्परतमां प्रेमाम्बुपूर्णां कलाम्।
चन्द्राभां चपलायुतद्युतिवतीं चाम्पेय भूषोज्ज्वलां
चम्पाभां वसुनेत्र बाणतरलांध्यायाम सञ्चोर्मिलाम्॥ ११॥

सौभाग्यैक निकेतनां भयहरां भव्यानुभूतिप्रदां
गौराङ्गीं शरदिन्दु सुन्दरमुखीं दिव्याङ्गभूषावृताम्।
श्रीसीताप्रणयप्रद प्रणयिनीं सद्भक्ति सम्पद्प्रदा
ध्याये नित्यमनन्य मानसप्रदां श्रीशोर्मिलां चिन्मयाम्॥ १२॥

## श्रीचम्पकला

सच्चाम्पेय तनुद्युतिवतीं सौभाग्य विद्यामयीं
श्रीमच्चारुतरां प्रसन्नवदनां चाम्पेय भासाम्वराम्।
श्रीरामस्य प्रियां प्रसादजननीं मोदप्रदां माधवीं
वन्देचम्पलतां विदेहतनयां पार्श्र्वेस्थितां सुन्दरीम्॥ १३॥

श्रीमच्चारुतरां प्रकाशपटलैरारात्प्रभाभास्वरां
वीणावादन तत्परां रघुपतेरानन्द सम्वर्धिनीम्।
सङ्गीतागम नृत्य गीतनिरतां नित्यासु यूथेश्वरीं
ध्याये चम्पलतां सदा प्रणतिभिः सर्वार्थदां सर्वदा॥ १४॥

## श्रीरूपकला

सच्चिन्मोदवतीं मनोद्भवमदोन्मत्तेभमुन्मादिनीं
प्रोत्तङ्गस्तनशीलकञ्चुककचैराच्छादितां सद्भुवाम्।
श्रृङ्गारैकवहां प्रमुदया संपूरयन्तीं सदा
वर्षन्तीं वरचारु रूप सुकला सञ्चारिणी सर्वदा॥ १५॥

श्रीमद्रूपकलेति रूपमधुरा सौभाग्य माङ्गल्यदा
सर्वाशा परिपूरिणी सुचरिता यूथेश्वरी शर्मदा।
चार्वङ्गी रुचिरेक्षणा विधुमुखी सौदामिनी सन्निभा
वन्देराघव पादपद्म निपुणा सेवापरा नित्यशः॥ १६॥

## श्रीहेमा

श्रीहेमा हेमवर्णा हरितमणिनिभा वस्त्रभूपाभिरामा
तारुण्या रामवामा विकसितवदना विद्युद्दामासुदामा।
श्रीसीताराम लीला विरचनचतुरा चित्रिणी चित्रधामा
वन्दे वेदवतीं मृदङ्ग निपुणां सङ्गीत विद्यारताम्॥ १७॥

सौभाग्यैकनिकेतना हरिहर ब्रह्मादि संसेविता
स्वर्वामा विबुधेडिता विधुमुखी रामप्रियाऽऽरामदा।
संसेव्या सुखदा सुधैक निलया शृङ्गारधारामयी
श्रीहेमाम्बा हेमभूषणधरा ध्यायेम सर्वेष्टदा॥ १८॥

## श्रीक्षेमा

श्रीक्षेमाक्षेमरूपा क्षितिपतिरमणी रामिणी रामवामा
दिव्यादामाभिरामा मणिमयमुकुटा मञ्जुमुक्ता ललामा।
सेव्याधर्मार्थकामा कलिकलुषहरा पूर्णकारुण्यधामा
श्रीसीतापार्श्वगामा मधुरिमसुखमा भासिनी रामवामा॥ १९॥

भाग्येशी भव्यरूपा भुवनपतिनुता नर्महास्यै स्वभिज्ञा
सेव्या सा रामवामा रतिपतिरमणी तुल्यरूपा परेशी।
हरिणाक्षी हरिलोचना हरिमुखी हर्य्यक्ष संसेविता
श्रीसीतापद पद्मगन्ध मधुपा क्षेमा सदा भावये॥ २०॥

## श्रीपद्मगन्धा

श्रीदेवी पद्मगन्धा प्रहसितवदना हर्षदा कामिनीनां
सर्वाशा पूरणी सा प्रकटित परमाह्लाददा शोभनाङ्गी।
श्रीसीतावामपार्श्वे सरसगुणकला दर्शयन्ती प्रसन्ना
सारङ्गी वादयन्ती विविधरसमयीं रामवामां भजेहम्॥ २१॥

सम्यक् सुष्ठुतरां प्रसन्नवदनां विद्योत्तमानप्रभां
नानाभूषणभूषितां मृगमदा संलिप्तपीनस्तनीम्।
नाना गान कलापनिचयैः सम्वर्धयन्तीं मुदं
ध्याये भक्तजयेप्सितार्थ फलदां श्रीपद्मगन्धाश्रियम्॥ २२॥

## श्रीसुलोचना

सुलोचना चारु विशाल नेत्रा विद्युन्निभा लोककटाक्षपातिनी।
विनोदशीला विबुधार्तिहारिणी, पुनातु मां सर्व सुखाप्ति कारिणी॥ २३॥

चन्द्रानना सकलसौख्यप्रदानदक्षा सीताकटाक्षकलनैक रसाब्धि स्वच्छा।
श्रीरामचन्द्रमुखचन्द्र चकोरिकेयं सुलोचनां शीलमतीं नतोऽस्मि ताम्॥ २४॥

## श्रीवरारोहा

वरारोहा साध्वी सकलविधि कैङ्कर्य निपुणा
मृगाक्षी मीनाक्षी गणनिचय सौभाग्य जननी।
सदा वन्द्याऽनिन्द्या निखिल सुख संघात निलया
भजे सीता प्रीता सुरस रसिका राम रमणी॥ २५॥

सुसेव्या संवेद्या सकल सुखसन्धान निरता
सदा सीतारामे भुवनभिरामे रसवती।
मनोऽव्या कर्षन्ती विपुल कथया कामकलया
वरारोहा देवी जयति जयदाजीवन करा॥ २६॥

## श्रीलक्ष्मणा

नमो लक्ष्मणा लक्षणाढ्या सुशीला सदाराम लीलासु साहित्य।
किशोरीकला कौशला केलिरूपा भजेऽहर्निश रामप्रीत्यैकपात्री ॥ २७ ॥

सदा जानकी जानि सेवानुरक्ता परेष्टा प्रिया मुख्ययूथेषु मुख्या।
महानाटके सर्वसाहित्यपूर्णा भजे लक्ष्मणां लक्ष्मणप्राणरूपाम् ॥ २८ ॥

## श्रीसुभगा

ध्याये श्रीसुभगां प्रसन्नवदनां चन्द्रोज्ज्वलां चन्द्रिकां
सर्वालङ्कृति रम्यरक्तवसनां विद्युन्निभां सुन्दरीम्।
सौभाग्यैक निकेतनां प्रियसखीं श्रीजानकीजीवनां
साध्वीं सर्वसुखावहां प्रणतिभिर्ववन्दे रमारञ्जिनीम् ॥ २९ ॥

सच्छास्त्रार्थकदम्बकानन महावादेषु तत्त्वेश्वरीं
नानातर्ककलाप कल्पनपरां पाण्डित्पदां पण्डिताम्।
नानैश्वर्य प्रदान ज्ञानपरमा भक्त्यैक भाव्यां शिवां सेवे
श्रीसुभगां-भजामि नितरां श्रीराम रामप्रियाम् ॥ ३० ॥

## श्रीचारुशीला

श्रीरामस्यप्रियां परात्परतरां यूथेश्वरीं जानकी
जानेर्नित्य प्रसाददाननिरतां श्रीशेशसम्भाविनीम्।
सौन्दर्यैकनिकेतना रसकलां कल्याणदा कोमलां
सर्वेशैरभिवन्दितां रसमयीं श्रीचारुशीलाम्भजे ॥ ३१ ॥

**॥ इति श्रीमद्रामसखेन्द्र श्री सीताप्रसाद स्वामि विरचितं**
**श्रीसीताङ्गजा सखीयूथेश्वरी स्तोत्रम् सम्पूर्णम् ॥**